# वर्णशिक्षा

## वर्णानां स्त्रीपुंनपुंसकसंज्ञा

ककारं च गकारं च चकारं च जकारकम्
टकारं च डकारं च तकारं च दकारकम् १
पकारं च बकारं च षकारं च क्षकारकम्
एते द्वादशवर्णा स्युः पुंल्लिगाश्चेति कीर्तिताः २
खकारं च घकारं च छकारं च झकारकम्
ठकारं च ढकारं च थकारं च धकारकम् ३
फकारं च भकारं च शकारं च सकारकम्
एते वै भानुबीजानि जायाश्चेति प्रकीर्तिताः ४
शेषं नपुंसकं ज्ञेयं त्रयो भेदा इति स्मृताः
शिवाग्निभूतरुद्राश्च त्रयोदश तिथिस्तथा ५
एते वै स्वरवर्णा स्युः पुंल्लिङ्गाश्चेति कीर्तिताः
पक्षो वेदरसा भानुर्मनुशैवाधिकारकाः ६
एतानि स्वरवर्णानि स्त्रीलिङ्गानीति कीर्त्यते
प्रकृतिः सप्तवर्णानि विकृतिस्तु नवार्णकम् ७
प्रकृतिर्ह्रस्वमित्युक्तं विकृतिर्दीर्घमुच्यते
प्रथमाश्च तृतीयाश्च षकारश्च क्षकारकम् ८
एते द्वादशवर्णा स्युः पुंल्लिङ्गाश्चेति कीर्तिताः
द्वितीयाश्च चतुर्थाश्च शसकारौ तथैव च ९
एते द्वादशवर्णा स्युस्त्रील्लिङ्गाश्चेति प्रकीर्तिताः

## वर्णानां सत्वरजस्तमो गुणाः

अन्तस्थाश्चोत्तमाश्चैव ऋ लृ वर्णौ तथैव च १०
हकारश्च ळकारश्च क्लीबाश्चेति प्रकीर्तिताः
पक्षो गृहार्थसंख्या च त्रयोदशमनुस्तथा ११

एते वै सात्विकगुणाः श्वेतवर्णं तथैव च
शिवाब्धिसप्तावसुदिक्च रुद्राः तिथिश्चैव कलास्तथा
१२
एते वै राजसगुणा रक्तवर्णं तथैव च
बाणो रसस्तृतीया च श्यामवर्णं तमो गुणः १३
हल्
द्वितीया च चतुर्थश्च तवर्गप्रथमोत्तमौ
पवर्गप्रथमश्चैव वेदाष्टादश एव च १४
एते वै सात्विकगुणा श्वेतवर्णं तथैव च
खकारं च घकारं च ठकारं च थकारकम् १५
तकारं च नकारं च पकारं च फकारकम्
वकारं च हकारश्च क्षकारं चेति सात्विकः १६
कवर्गप्रथमश्चैव टवर्गश्च तथैव च
तृतीयाश्च तपवर्गचतुर्थाश्च चटवर्गोत्तमौ तथा १७
ऊष्माणश्चैव रेफश्च लळकारौ रजोगुणाः
कवर्गप्रथमश्चैव टवर्गश्च तथैव च १८
तृतीयाश्च भकारश्च धकारं च ञकारकम्
णकारं चोष्मणश्चैव रेफश्चैव लळौ तथा १९
एते रजोगुणाः प्रोक्ता रक्तवर्णं तथैव च
चकारश्च द्वितीया च ङकारं च मकारकम् २०
ढकारं च दकारं च यकारं च झकारकम्
तामसः कृष्णवर्णं च उत्तमश्च मिश्रकम् २१
चकारश्च द्वितीया च आद्यन्तौ वर्गपञ्चमौ
चटवर्गचतुर्थौ च तवर्गश्च तृतीयकम् २२

यकारसामसगुणश्यामवर्णस्तथैव च  २३
अकारं सर्वदैवत्यं रक्तवर्णं रजस्मृतम्
आकारस्यात्पराशक्ति श्वेतं सात्विकमुच्यते  २४
इकारं विष्णुदैवत्यं श्यामं तामसमुच्यते
मायाशक्तिरितीकारं पीतं राजसमुच्यते  २५
उकारं वास्तुदैवत्यं कृष्णं तामसमीरितम्
ऊकारं भूमिदैवत्यं श्यामळं तामसं भवेत्  २६
ऋकारं ब्रह्मणो ज्ञेयं पीतं राजसमुच्यते
शिखण्डिरूपं ॠकारं राजसं पीतवर्णकम्  २७
अश्विनौ तु ऌ ॡ प्रोक्तौ
एकारं वीरभद्रं स्यात् रजः पीतं तु सिद्धिदम्  २८
ऐकारं वाग्भवं विन्द्या
ओकारमीश्वरं विंद्याज्ज्योतिः सत्वं फलप्रदम्  २९
औकारमादिशक्ति स्याच्छुक्लं सर्वत्र सिद्धिदम्
अंकारं तु महेशं स्याद्रक्तवर्णं तु राजसम्  ३०
अः कारं कालरुद्रं च रक्तं राजसमुच्यते
प्राजापत्यं ककारं स्यात्पीतं वृष्टिप्रदं रजः ३१
खकारं जाह्नवीबीजं क्षीराभं पापनाशनम्
गणापत्यं गकारं स्याद्रक्ताभं विघ्ननाशनम्  ३२
घकारं भैरवं ज्ञेयं मुक्ताभं शत्रुनाशनम्
ङकारं कालबीजं स्यात्कालं तार्क्ष्यं समुच्यते  ३३
चकारं चण्डरुद्रं स्यात् अञ्जनाभं तु तामसम्
छकारं भद्रकाळी स्यात्तामसं परिकीर्तितम्  ३४
जकारं जम्भहा ज्ञेयं रक्ताभं च जयावहम्

झकारमर्धनारीशं श्यामरक्तं तु मिश्रकम् ३५
ञकारं सर्पदैवत्यं पीतं राजसरूपकम्
भृङ्गीशं स्याट्टकारं तु रक्तं राजसमेव च ३६
ठकारं चन्द्रबीजं स्याच्छ्वेतं सात्विकमुच्यते
डकारं चैकनेत्रं स्यात्पीतं राजसमुच्यते ३७
ढकारं यमबीजं स्यान्नीलं मृत्युविनाशनम्
णकारं नन्दिबीजं स्याद्रक्ताभं चार्थसिद्धिदम् ३८
तकारं वास्तुदैवत्यं श्वेतं
थकारं ब्रह्मणो ज्ञेयं
दुर्गाबीजं दकारं स्याच्छ्यामं सर्वार्थसिद्धिदम् ३९
धकारं धनदं प्रोक्तं पीताभं चार्थसिद्धिदम्
नकारं चैव सावित्री स्फाटिकं पापनाशनम् ४०
पकारं चैव पर्जन्यं शुक्लाभं वृष्टिसिद्धिदम्
फकारं पाशुपत्यं च सत्वः पापविनाशनम् ४१
बकारं तु त्रिमूर्ति स्यात्पीतं सर्वार्थसिद्धिदम्
भकारं भार्गवं विन्द्याद्रक्तं भाग्यप्रदं भवेत् ४२
मकारं मदनं विन्द्याच्छ्यामं कामफलप्रदम्
यकारं वायुदैवत्यं कृष्णमुच्चाटनं भवेत् ४३
रकारं वह्निदैवत्यं रक्ताभं राजसं भवेत्
लकारं पृथिवीबीजं पीतं स्यात् लम्भनं भवेत् ४४
वकारं वारुणं बीजं शुक्लाभं योगनाशनम्
लक्ष्मीबीजं शकारं स्यात् हेमाभं राजसं भवेत् ४५
षकारं द्वादशात्मं स्यात् रक्ताभं तु जयप्रदम्
सकारं शक्तिबीजं स्याद्रक्तं स्थितिकरं भवेत् ४६

हकारं शिवबीजं स्याच्छुद्धस्फटिकसन्निभम्
अणिमाद्यष्टसिद्धं च भुक्तिं मुक्तिं प्रयच्छति ४७
ळकारं चात्मबीजं स्यात् रक्ताभं सर्वसिद्धिदम् ४८

[इति वर्णशिक्षा समाप्ता]

Reference:
*Descriptive Catalogue of Sanskrit Manuscripts in the Oriental Research Institute, University of Mysore*. Mysore: Oriental Research Institute, Vol. II: (Vedāṅgam, etc.). 1978. Catalogued as Varṇa-Liṅgādi-Nirṇaya, Manuscript Catalog entry #3756 (Palm Leaf Bundle #4772, Text #20 in that bundle). Palm Leaves, Telugu script, 4 folios, incomplete.